सप्तर्षीणां मरीच्यादीनां हस्तैः करैः उद्धृतानि त्रुटितानि हेमपद्मानि सुवर्ण-नलिनानि यस्याः ताम्, त्र्यम्बकमौलिमालाम्—शिवमस्तकस्रजम्, त्रिस्रोतसम्—भागीरथीम्, तपोधनानाम्—तपस्विनाम्, अभिषेकाय—स्नानाय, प्रवर्तयामास—प्रवाहयामास, किल—निश्चयेन ।

टिप्पणी—सप्तर्षिहस्तोद्धृतहेमपद्माम्—सप्तर्षियों के हाथों से तोड़े गये स्वर्णकमल वाली । सप्त च ते ऋषयः—सप्तर्षयः । यहाँ 'दिक्संख्ये संज्ञायाम्' सूत्र से (तत्पुरुष समास) । सप्तर्षि ये कहलाते हैं—मरीचि, अङ्गिरस, अत्रि, पुलस्त्य, पुलह, क्रतु और वशिष्ठ । सप्तर्षीणां हस्ताः (षष्ठी तत्पुरुष समास), तैः उद्धृतानि हेमपद्मानि यस्याः सा (बहुव्रीहि समास,) ताम् ।

**वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्या ।**
**निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥**

अन्वय—वीरासनैः ध्यानजुषाम् ऋषीणां समध्यासितवेदिमध्याः अमी शाखिनः अपि निवातनिष्कम्पतया योगाधिरूढा इव विभान्ति ।

शब्दार्थ—वीरासनैः—वीरासन लगाकर, ध्यानजुषाम्—ध्यान करने वाले, ऋषीणां समध्यासितवेदिमध्याः—ऋषियों के द्वारा अधिष्ठित वेदियों के मध्य भाग वाले, अमी शाखिनः अपि—ये वृक्ष भी, निवातनिष्कम्पतया—वायु के अभाव के कारण निश्चलता को प्राप्त होकर, योगारूढाः इव—समाधिस्थ (ऋषियों की) तरह, विभान्ति—सुशोभित हो रहे हैं ।

भाषानुवाद—वीरासन लगाकर ध्यान करने वाले ऋषियों के द्वारा अधिष्ठित वेदियों के मध्यभाग वाले ये वृक्ष भी वायु के अभाव के कारण निश्चलता को प्राप्त होकर समाधिस्थ (ऋषियों की) तरह सुशोभित हो रहे हैं ।

संस्कृत-व्याख्या—

तपोवनस्य वृक्षाः मुनीनामिव समाधिसंलग्नाः प्रतीयन्ते—वीरासनैः—जयसाधनैः, ध्यानजुषाम्—समाधिसेविनाम्, ऋषीणाम्—मुनीनाम्, समध्यासितवेदिमध्याः—सम्यक् अधिष्ठितानि सम्यक् अधिष्ठानि वेदीनां

मध्यानि मध्यभागाः यैः तादृशाः, अमी — इमे, शाखिनः अपि—तरवः अपि, निवातनिष्कम्पतया—वायुरहितनिश्चलतया, योगाधिरूढाः—ध्यानभाजः, इव - यथा, विभान्ति—शोभन्ते ।

अत्रोत्प्रेक्षालङ्कारः ।

टिप्पणी—वीरासनैः—वीरासन लगाकर । एक पैर को एक जाँघ पर और दूसरे पैर को दूसरी जाँघ पर रखकर बैठना ही वीरासन कहलाता है । वीराणाम् आसनानि वीरासनानि (षष्ठी तत्पुरुष समास), तैः । शाखिनः—वृक्ष । शाखाः विद्यन्ते एषाम् इति शाखिनः । शाखा + इनि । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इत्यमरः ।

त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ।। ५३ ।।

अन्वय—त्वया पुरस्तात् यः श्याम इति प्रतीतः वटः उपयाचितः, सः अयं फलितः (सन्) सपद्मरागः गारुडानां मणीनां राशिः इव विभाति ।

शब्दार्थ—त्वया—तुमने, पुरस्तात्—पहले, यः श्याम इति प्रतीतः वटः—जिस श्याम नामक वट-वृक्ष से, उपयाचितः—प्रार्थना की थी, सः अयम्—वह यह, फलितः—फला हुआ, सपद्मरागः—पद्मरागमणियों सहित, गारुडानां मणीनां राशिः इव—मरकतमणियों की राशि के समान, विभाति—शोभायमान हो रहा है ।

भाषानुवाद—तुमने पहले जिस श्याम नामक वट-वृक्ष से प्रार्थना की थी, वही (वट-वृक्ष) फल कर पद्मरागमणियों सहित मरकत मणियों की राशि के समान शोभायमान हो रहा है ।

संस्कृत-व्याख्या—

प्रयागस्थितस्य श्यामवटवृक्षस्य वर्णनं करोति कविः—

त्वया—भवत्या, पुरस्तात्—पूर्वम्, यः, श्याम इति प्रतीतः—श्यामनामकः, वटः—न्यग्रोधः, वटवृक्षः इत्यर्थः । उपयाचितः—प्राथितः, सः—असौ, अयम्—एषः (स एव वटवृक्षः इत्यर्थः ।) फलितः—फलयुक्तः (सन्),

सपद्मरागः—पद्मरागमणिना सहितः, गारुडानां मणीनाम्—मरकतानाम्, मरकतमणीनाम् इत्यर्थः। राशिः इव—पुञ्जः इव, विभाति—राजति।

अत्रोपमालङ्कारः

टिप्पणी—फलितः—फला हुआ, फलों से युक्त। फल+इतच्। उपयाचितः—जिसकी प्रार्थना की थी अथवा मनोती मानी थी। उप+यांच्+क्त। विभाति—वि+भा+लट्+ति (प्रथम पुरुष एकवचन)।

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥ ५४ ॥

अन्वय—(अनवद्याङ्गि! पश्य, यमुनातरङ्गैःभिन्नप्रवाहा गङ्गा) क्वचित् प्रभालेपिभिः इन्द्रनीलैः अनुविद्धा मुक्तामयी यष्टिः इव (विभाति) अन्यत्र इन्दीवरैः उत्खचितान्तरा सितपङ्कजानां माला इव (विभाति)।

शब्दार्थ—(अनवद्याङ्गि—हे अनिन्दित शरीर वाली (सीते!), पश्य—देखो, यमुनातरङ्गैः—यमुना की (श्यामल) तरङ्गों से, भिन्नप्रवाहा गङ्गा—मिली हुई धारा वाली गङ्गा, क्वचित्—कहीं, प्रभालेपिभिः इन्द्रनीलैः—कान्ति से मण्डित इन्द्रनील मणियों से, अनुविद्धा—जड़ित, मुक्तामयी यष्टिः इव—मोतियों की लड़ी की तरह, विभाति—शोभ रही है, अन्यत्र—दूसरी ओर, इन्दीवरैः—नीलकमलों से, उत्खचितान्तरा—बीच-बीच में व्याप्त, सितपङ्कजानां माला इव—श्वेत कमलों की माला की तरह, विभाति—सुशोभित हो रही है।

भाषानुवाद—(हे अनिन्दित शरीर वाली सीते! देखो, यमुना की श्यामल तरङ्गों से मिली हुई धारा वाली गङ्गा) कहीं कान्ति से मण्डित इन्द्रनील मणियों से जड़ित मोतियों की लड़ी की तरह शोभ रही है और दूसरी ओर नीलकमलों से बीच-बीच में व्याप्त श्वेत कमलों की माला की तरह सुशोभित हो रही है।

संस्कृत-व्याख्या—

गङ्गायमुनयोः सङ्गमस्य शोभायाः वर्णनं करोति कविकुलगुरुकालिदासः—

(अनवद्याङ्गि—हे अनवद्याङ्गि ! अनिन्द्यसुन्दरी ! वा, पश्य—विलोकय, यमुनातरङ्गैः—कालिन्दीवीचिभिः, भिन्नप्रवाहा—मिश्रितप्रवाहा, गङ्गा—जाह्नवी), क्वचित्—कुत्रापि, प्रभालेपिभिः—कान्तिप्रलेपिभिः, इन्द्रनीलैः—नीलमणिविशेषैः, अनुविद्धा—सहगुम्फिता, मुक्तामयी—मौक्तिकवि—निर्मिता, यष्टिः इव—हारावलिः इव, (विभाति), अन्यत्र—अन्यस्मिन् स्थाने, इन्दीवरैः—नीलोत्पलैः, उत्खचितान्तरा—सहग्रथिता, सितपङ्कजानाम्—श्वेतकमलानाम्, माला—स्रक्, इव—यथा (विभाति)।

श्लोकेऽस्मिन् उपमालङ्कारः उत्प्रेक्षालङ्कारश्च स्तः।

टिप्पणी—प्रभालेपिभिः—कान्ति से युक्त। प्रभया लिम्पन्ति इति प्रभालेपिनः। प्रभा + लिप्—णिनि, तैः। इन्दीवरैः—नील-कमलों से। 'इन्दीवरं च नीलेऽस्मिन्' इत्यमरः।

क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥

अन्वय—क्वचित् कादम्बसंसर्गवती प्रियमानसानां खगानां पङ्क्तिरिव (विभाति), अन्यत्र कालागुरुदत्तपत्रा भुवः चन्दनकल्पिता भक्तिः इव (विभाति)।

शब्दार्थ—क्वचित्—कहीं पर, कादम्बसंसर्गवती—श्यामल हंसों से मिले हुए, प्रियमानसानां खगानाम्—मानसप्रेमी पक्षियों की अर्थात् राजहंसों की, पङ्क्तिः इव—पङ्क्ति की तरह, (विभाति—शोभित हो रही है), अन्यत्र—दूसरी ओर, कालागुरुदत्तपत्रा—काले अगुरु से निर्मित मकरिका-पत्रों (मकराकार रचना विशेष), चन्दनकल्पिता—चन्दन से निर्मित, भुवः—पृथिवी के (मुख पर), भक्तिः इव—शृङ्गार-रचना की तरह, (विभाति—शोभायमान है)।

भाषानुवाद—कहीं श्यामल हंसों से मिले हुए मानसप्रेमी पक्षियों की अर्थात् राजहंसों की पङ्क्ति की तरह शोभित हो रही है और दूसरी ओर काले अगुरु से निर्मित मकरिकापत्रों तथा चन्दन से निर्मित पृथिवी के (मुख पर) शृङ्गार रचना की तरह शोभायमान है।

संस्कृत-व्याख्या—

श्लोकेऽस्मिन् गङ्गायमुनयोः सङ्गमस्य वर्णनं करोति कविः—

क्वचित्—कुत्रापि कस्मिंश्चित् स्थाने वा, कादम्बसंसर्गवती—नीलहंस-संसृष्टा, प्रियमानसानाम्—प्रियं मानसं नाम सरः येषां तेषाम्, खगानाम्—पक्षिणाम्, राजहंसानाम् इत्यर्थः। पङ्क्तिः इव—श्रेणी इव, (विभाति—राजति), अन्यत्र— अन्यस्मिन् स्थाने, कालागुरुदत्तपत्रा—कालेन श्यामवर्णेन अगुरुणा द्रव्यविशेषेण दत्तानि रचितानि पत्राणि मकरिकापत्राणि यत्र तथा-भूता, भुवः—वसुधायाः, चन्दनकल्पिता—मलयजविरचिता, भक्तिः इव—प्रसाधनविशेषलेखा इव, (विभाति—विराजते)।

श्लोकेऽस्मिन् उपमोत्प्रेक्षालङ्कारौ स्तः।

टिप्पणी—प्रियमानसानाम्—प्रियमानसरोवर वाले। प्रियं मानसं येषां ते प्रियमानसाः (बहुव्रीहि समास), तेषाम्। यहाँ 'वा प्रियस्य' इस वार्तिक से 'प्रिय' शब्द का पूर्वनिपात हुआ।

कालागुरुदत्तपत्रा—काले अगुरु से निर्मित मकरिकापत्र (मकराकार रचना विशेष)। कालम् अगुरु (कर्मधारय समास), कालागुरुणा दत्तानि पत्राणि यस्यै सा (बहुव्रीहि समास)।

क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभः प्रदेशा॥ ५६॥

अन्वय—क्वचित् छायाविलीनैः तमोभिः शबलीकृता चान्द्रमसी प्रभा इव (विभाति), अन्यत्र रन्ध्रेषु आलक्ष्यनभः प्रदेशा शुभ्रा शरदभ्रलेखा इव (विभाति)।

शब्दार्थ—क्वचित्—कहीं, छायाविलीनैः (वृक्षों की) छाया में स्थित, तमोभिः—अन्धकारों से, शबलीकृता—चितकबरी की गयी, चान्द्रमसी प्रभा इव—चन्द्रमा की चाँदनी की तरह, (विभाति—शोभा पा रही है), अन्यत्र—दूसरी ओर या दूसरे स्थान में, रन्ध्रेषु—छिद्रों में अर्थात् रिक्त स्थानों में, आलक्ष्यनभः प्रदेशा—कहीं-कहीं दीख रहा है आकाश-प्रदेश जिसमें ऐसी,

शुभ्राशरदभ्रलेखा इव—शरद् ॠतु की श्वेत मेघ माला की तरह, (विभाति —शोभायमान है)।

भाषानुवाद—कहीं (वृक्षों की) छाया में अन्धकार से चितकबरी की गयी चन्द्रमा की चांदनी की तरह शोभा पा रही है और दूसरी ओर छिद्रों में अर्थात् रिक्त स्थानों में कहीं-कहीं दीख रहा है, आकाश-प्रदेश जिसमें ऐसी शरद्ॠतु की श्वेत मेघमाला की तरह शोभायमान है।

संस्कृत-व्याख्या—

गङ्गायमुनयोः सङ्गमस्य शोभायाः वर्णनं करोति कविः—

क्वचित्—कस्मिंश्चित् स्थाने, छायाविलीनैः—छायास्थितैः, तमोभिः—अन्धकारैः, चान्द्रमसी प्रभा—चन्द्रसम्बन्धिनी, प्रभा—कान्तिः, ज्योत्स्ना इत्यर्थः। इव—यथा, (विभाति—शोभते), अन्यत्र—अन्यस्मिन् स्थाने, रन्ध्रेषु—छिद्रेषु, आलक्ष्यनभःप्रदेशा—आ ईषत् लक्ष्यः विलोक्यमानः नभसः गगनस्य प्रदेशः भागः यत्र तथा भूता, शुभ्रा—श्वेता, शरदभ्रलेखा इव—शरन्मेघपङ्क्तिः इव, (विभाति—राजते)।

श्लोकेऽस्मिन् उपमालङ्कारस्य उत्प्रेक्षालङ्कारस्य च संसृष्टिः वर्तते।

टिप्पणी—छायाविलीनैः—(वृक्षों की) छाया में स्थित। छायासु विलीनानि छायाविलीनानि (सप्तमी तत्पुरुष समास), तैः। वि+ली+क्त—विलीन। अन्धकारैः—अन्धकारों से। 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्त्रं तिमिरं तमः' इत्यमरः। शबलीकृता—विविध रंगों से चित्रित। अशबला शबला सम्पद्यमाना कृता इति शबलीकृता। शबल+च्वि, ईत्व, चि+क्त+टाप्। चान्द्रमसी—चन्द्रमसः इयम् इति चान्द्रमसी। चन्द्रमस्+अण्+ङीप्।

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य।
पश्यानवद्याङ्गि! विभाति गङ्गा भिन्नप्रवाहा यमुनातरंगैः॥ ५७॥

अन्वय—अनवद्याङ्गि!, पश्य यमुनातरङ्गैः भिन्नप्रवाहा गङ्गा क्वचित् च कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुः इव विभाति।

शब्दार्थ—अनवद्याङ्गि—हे सुन्दरी!, पश्य—देखो, यमुनातरङ्गैः—

यमुना की (श्यामल) तरङ्गों से, भिन्नप्रवाहा गङ्गा—मिली हुई धारा वाली गङ्गा, च—और, क्वचित्—कहीं पर, कृष्णोरगभूषणा—कृष्ण सर्पों से विभूषित, भस्माङ्गरागा—भस्म रूपी अङ्गराग का लेप किये हुए, ईश्वरस्य —शिवजी के, तनुः इव—शरीर की तरह, विभाति—शोभित हो रही है।

भावानुवाद—हे सुन्दरी ! देखो, यमुना की (श्यामल) तरङ्गों से मिली हुई धारावाली गङ्गा कहीं पर कृष्ण सर्पों से विभूषित और भस्मरूपी अङ्ग-राग का लेप किये हुए शिव जी के शरीर की तरह शोभित हो रही है।

संस्कृत-व्याख्या—

श्लोकेऽस्मिन् अपि कविः गङ्गायमुनयोः सङ्गमस्य शोभां वर्णयति—

अनवद्याङ्गि—हे सुन्दरी ! पश्य—अवलोकय, यमुनातरङ्गैः—कालिन्दीभङ्गैः, भिन्नप्रवाहा—भिन्नः मिश्रितः प्रवाहः धारा यस्याः तादृशी, गङ्गा—जाह्नवी, क्वचित्—कुत्रापि, कृष्णोरगभूषणा—कृष्णसर्पविभूषणा, भस्माङ्गरागा—भस्म भूतिः एव अङ्गरागः विलेपनद्रव्यविशेषः यस्याः तादृशी, ईश्वरस्य—महादेवस्य, तनुः—वपुः, इव—यथा, विभाति—राजते।

अत्र उत्प्रेक्षालङ्कारस्य उपमालङ्कारस्य च संसृष्टिरस्ति।

टिप्पणी—कृष्णोरगभूषणा— कृष्ण सर्पों से विभूषित। उरसा गच्छन्ति इति उरगाः। उरस् + गम् + ड। भूष्यते एभिः इति भूषणानि। भूष् + णिच् + ल्युट् (अन)। कृष्णाः उरगाः कृष्णोरगाः (कर्मधारय समास), ते भूषणानि यस्याः सा (बहुव्रीहि समास)।

यहाँ ५४ से लेकर ५७ श्लोकों तक में ५७ वें श्लोक का उत्तरार्ध लेकर ही उक्त सभी श्लोकों का अर्थ निकलता है। अतः 'कलापक' है। इस संदर्भ में कहा भी गया है—

द्वाभ्यां तु युग्मकं प्रोक्तं त्रिभिः प्रोक्तं विशेषकम्।
कलापकं चतुर्भिः स्यात् तदूर्ध्वं कुलकं मतम्॥

(दो श्लोकों से रचित वाक्य को 'युग्मक' कहते हैं, तीन से रचित को 'विशेषक', चार वाले को 'कलापक' और चार से अधिक वाले को 'कुलक' कहा जाता है।)

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ।। ५८ ।।

अन्वय—अत्र समुद्रपत्न्योः जलसन्निपाते अभिषेकात् पूतात्मनां तनुत्यजां तत्त्वावबोधेन विना अपि भूयः शरीरबन्धः नास्ति किल ।

शब्दार्थ—अत्र—यहाँ (प्रयाग में), समुद्रपत्न्योः—समुद्रपत्नियों के यानी गङ्गा-यमुना के, जलसन्निपाते—जल के सङ्गम में, अभिषेकात्—स्नान करने से, पूतात्मनाम्—पवित्र आत्मा वाले, तनुत्यजाम्—शरीरत्यागियों का, तत्त्वावबोधेन विना—बिना तत्त्वज्ञान के, अपि—भी, भूयः—पुनः, शरीर-बन्धः न अस्ति—शरीर का बन्धन नहीं रहता अर्थात् वे आवागमन से मुक्त हो जाते हैं ।

भाषानुवाद—यहाँ (प्रयाग में) समुद्रपत्नियों के यानी गङ्गा-यमुना के सङ्गम में स्नान करने से पवित्र आत्मा वाले शरीरत्यागियों का बिना तत्त्व-ज्ञान के भी पुनः शरीर का बन्धन नहीं रहता अर्थात् वे आवागमन से मुक्त हो जाते हैं ।

संस्कृत-व्याख्या—

कविकुलगुरुकालिदासः गङ्गायमुनयोः सङ्गम-स्नानस्य महत्त्वं वर्णयति—

अत्र—अस्मिन् स्थाने, प्रयागे इत्यर्थः । समुद्रपत्न्योः—गङ्गायमुनयोः, जलसन्निपाते—सङ्गमे, अभिषेकात्—स्नानात्, पूतात्मनाम्—पवित्रात्मनाम्, तनुत्यजाम्—देहत्यागिनाम्, तत्त्वावबोधेन—तत्त्वज्ञानेन, विना अपि—ऋते, अपि, भूयः—पुनः, शरीरबन्धः—गात्रयोगः, न नहि, अस्ति—वर्तते, किल—निश्चयेन ।

टिप्पणी—समुद्रपत्न्योः—समुद्र की दो पत्नियों (गङ्गा और यमुना) के । यों तो सभी नदियाँ समुद्र की पत्नियाँ ही मानी जाती हैं । पर, उनमें गङ्गा और यमुना प्रमुख हैं ।

जलसन्निपाते—जल के मिलन अथवा सङ्गम में । सम् + नि + पत् + घञ् = सन्निपातः । जलयोः सन्निपातः (षष्ठी तत्पुरुष समास), तस्मिन् ।

तनुत्यजाम्—शरीर का परित्याग करने वालों का। तनुं त्यजन्ति इति तनुत्यजः। तनु + त्यज् + क्विप्, तेषाम्।

पुरं निषादाधिपतेरिदं तद्यस्मिन्मया मौलिमणिं विहाय।
जटासु बद्धास्वरुदत्सुमन्त्रः कैकेयि कामाः फलितास्तवेति ॥ ५९ ॥

अन्वय—इदं तत् निषादाधिपतेः पुरम् (अस्ति) यस्मिन् मया मौलिमणिं विहाय जटासु बद्धासु सुमन्त्रः, 'कैकेयि ! तव कामाः फलिताः' इति अरुदत्।

शब्दार्थ—इदम्—यह, तत्—वह, निषादाधिपतेः—निषादराज (गुह) का, पुरम्—नगर (शृङ्गवेरपुर), (अस्ति—है), यस्मिन्—जिसमें, जहाँ, मया—मेरे द्वारा, मौलिमणिम्—मुकुटमणि को, विहाय—छोड़कर, जटासु बद्धासु—जटा बाँध लेने पर, सुमन्त्रः—सुमन्त्र, इति अरुदत्—यह कह कर रोने लगे थे (कि), कैकेयि—कैकेयी !, तव—तुम्हारे, कामाः—मनोरथ, फलिताः—सफल हुए।

भाषानुवाद—यह वही निषादराज (गुह) का नगर (शृङ्गवेरपुर) है, जहाँ मेरे द्वारा मुकुटमणि को त्याग कर जटा बाँध लेने पर सुमन्त्र यह कह कर रोने लगे थे कि कैकेयी ! तुम्हारे मनोरथ सफल हुए।

संस्कृत-व्याख्या—

निषादराजस्य नगर्याः वर्णनं करोति इविः—

इदम्—एतत्, तत्—अदः, पुरम्—नगरम् (अस्ति), यस्मिन्—नगरे, मया—रामेण, मौलिमणिम्—मुकुटम्, विहाय—परित्यज्य, जटासु—सटासु, बद्धासु—निबद्धासु रचितासु वा, सुमन्त्रः—एतन्नामकः मन्त्री, कैकेयि—भरतमातः, तव—ते, कामाः—मनोरथाः, फलिताः—सफलाः (जाताः), इति—एवं (कथयन्), अरुदत्—रुदितवान्।

टिप्पणी—निषादाधिपतेः—निषादानाम् अधिपतिः (षष्ठी तत्पुरुष समास), तस्य। पुरम्—नगर, शृङ्गवेरपुर। निषादराज की राजधानी शृङ्गवेरपुर थी। मौलिमणिम्—मौलिस्थो मणिः मौलिमणिः मध्यमपदलोपी समास), तम्। सुमन्त्रः—सुमन्त्र। सुमन्त्र राजा दशरथ के मन्त्री थे। वे

राम आदि के साथ शृङ्गवेरपुर तक आये थे। राम ने यहीं से सुमन्त्र को लौटा दिया था।

पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः।
ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६० ॥

अन्वय—पुण्यजनाङ्गनानां पयोधरैः निर्दिष्टहेमाम्बुजरेणु ब्राह्मं सरः, यस्याः बुद्धेः अव्यक्तम् इव कारणम् आप्तवाचः उदाहरन्ति।

शब्दार्थ—पुण्यजनाङ्गनानाम्—यक्षों की स्त्रियों के, पयोधरैः—स्तनों द्वारा, निर्दिष्टहेमाम्बुजरेणु—उपभोग किये गये स्वर्ण कमलों के पराग वाले, ब्राह्मं सरः—ब्राह्मसर को यानी मानसरोवर को, आप्तवाचः—यथार्थ को कहने वाले मुनि लोग, यस्याः—जिस (सरयू नदी) का, कारणम्—कारण यानी उद्‌गमस्थल, अव्यक्तम् इव उदाहरन्ति—उसी तरह बताते हैं, जिस तरह प्रकृति को, बुद्धेः—बुद्धि का (कारण कहते हैं)।

भाषानुवाद—यक्षों की स्त्रियों के स्तनों द्वारा उपभोग किये गये स्वर्ण-कमलों के पराग वाले ब्राह्मसर को यानी मानसरोवर को यथार्थ को कहने वाले मुनि लोग जिस (सरयू नदी) का कारण यानी उद्‌गमस्थल उसी तरह बताते हैं, जिस तरह प्रकृति को बुद्धि का (कारण) बताते हैं।

संस्कृत-व्याख्या—

महाकविः कालिदासः श्लोकेऽस्मिन् सरयूनदीं वर्णयति—

पुण्यजनाङ्गनानाम्—यक्षस्त्रीणाम्, पयोधरैः—स्तनैः, निर्दिष्टहेमाम्बुजरेणु—उपयुक्तस्वर्णकमलरेणु, ब्राह्मं सरः—ब्रह्मसम्बन्धि सरः, मानसरोवरम् इत्यर्थः। यस्याः—सरयूनद्याः, बुद्धेः—महतत्त्वस्य, अव्यक्तम्—प्रकृतिं प्रधानं वा, इव—यथा, कारणम्—उत्पत्तिहेतुम्, आप्तवाचः—आप्ता वाग् येषां ते आप्तवाचः। उदाहरन्ति—कथयन्ति।

अत्रोपमालङ्कारः।

टिप्पणी—पुण्यजनाङ्गनानाम्—यक्षों की स्त्रियों के। पुण्यजनानाम् अङ्गनाः पुण्यजनाङ्गनाः (षष्ठी तत्पुरुष समास), तासाम्।, यक्षैकपिङ्गल-विलश्रीदपुण्यजनेश्वराः इत्यमरः।

आप्तवाचः—विश्वास योग्य वाणी वाले सत्यवादी। आप्ता वाक् येषां ते आप्तवाचः (बहुव्रीहि समास)। प्राचीन ऋषियों एवं वेद, उपनिषद् आदि धर्मग्रन्थों के वचनों को आप्तवाक् या आप्त कहा गया है।

उदाहरन्ति—कहते हैं। उद्+आ+हृ+लट्+अन्ति (प्रथम पुरुष बहुवचन)।

कहने का तात्पर्य यह है कि जिस तरह महत्तत्त्व का उत्पत्ति स्थान अव्यक्त (प्रकृति) है उसी तरह सरयू नदी का उत्पत्ति स्थान मानसरोवर है। जैसे किसी ने अव्यक्त को नहीं देखा है वैसे ही सरयू नदी को भी मानसरोवर से निकलते हुए किसी ने नहीं देखा है। यहाँ 'आप्तवाक्य' ही प्रणाम है।

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम्।
तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥६१॥

अन्वय—तीरनिखातयूपा या तुरङ्गमेधावभृथावतीर्णैः इक्ष्वाकुभिः पुण्यतरीकृतानि जलानि अयोध्यां राजधानीम् अनुवहति।

शब्दार्थ—तीरनिखातयूपा—तट पर गड़े हुए यज्ञस्तम्भों वाली, या—जो (सरयूनदी), तुरङ्गमेधावभृथावतीर्णैः—अश्वमेध यज्ञ की समाप्ति पर किये जाने वाले स्नान के लिए उतरे हुए, इक्ष्वाकुभिः—इक्ष्वाकुवंशी राजाओं के द्वारा, पुण्यतरीकृतानि—अतिशय पवित्र किये गये, जलानि—जल को, अयोध्यां राजधानीम् अनु—राजधानी अयोध्या के पास, वहति—प्रवाहित करती है।

भाषानुवाद—तट पर गड़े हुए यज्ञस्तम्भों वाली जो (सरयू नदी) अश्वमेध यज्ञ की समाप्ति पर किये जाने वाले स्नान के लिए उतरे हुए इक्ष्वाकुवंशी राजाओं के द्वारा अतिशय पवित्र किये गये जल को राजधानी अयोध्या के पास प्रवाहित करती है।

संस्कृत-व्याख्या—



सरयूनद्याः वर्णनं करोति कविः—

**तीरनिखातयूपा**—तीरे निखाताः तीरनिखाताः, तीरनिखाताः यूपाः यस्याः सा, या—सरयूनदी, तुरङ्गमेधावभृथावतीर्णैः—अश्वमेधयज्ञान्तस्नानावरूढैः, इक्ष्वाकुभिः—इक्ष्वाकुवंशीयराजभिः, पुण्यतरीकृतानि—पवित्रतरीविहितानि, जलानि वारीणि, अयोध्यां राजधानीम्—नगरीम्, अनु—समीपे, वहति—प्रापयति ।

**टिप्पणी**—पुण्यतरीकृतानि—अतिशय पवित्र किये गये । अतिशयेन पुण्यानि पुण्यतराणि पुण्य+तरप् । अपुण्यानि पुण्यतराणि कृतानि इति पुण्यतरीकृतानि । पुण्यतर+च्वि, ईत्व, कृ+क्त । वहति—बहाती है । यहाँ अन्तर्भावित ण्यर्थ बोधित है । वह्+लट्+ति (प्रथमपुरुष एकवचन) ।

या सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् ।
सामान्यधात्रीमिव मानसं मे सम्भावयत्युत्तरकोसलानाम् ।। ६२ ।।

**अन्वय**—यां मे मानसं सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् उत्तरकोशलानां सामान्यधात्रीमिव सम्भावयति ।

**शब्दार्थ**—याम्—जिस (सरयू नदी) को, मे—मेरा, मानसम्—हृदय, सैकतोत्सङ्गसुखोपचितानाम्—बालुकामय तट रूप गोद में सुख पाने योग्य, प्राज्यैः पयोभिः—प्रचुर जल (रूप दूध) से, परिवर्धितानाम्—पाले गये, उत्तरकोसलानाम्—उत्तर कोसल के राजाओं की, सामान्यधात्रीम् इव—सामान्यधात्री की तरह यानी सर्वसाधारण उपमाता की तरह, सम्भावयति—मानता है ।

**भाषानुवाद**—जिस सरयू नदी को मेरा हृदय बालुकामय तट रूप गोद में सुख पाने योग्य एवं प्रचुर (जल रूप दूध) से पाले गये उत्तरकोसल के राजाओं की सामान्य धात्री की तरह यानी सर्वसाधारण माता की तरह मानता है ।

**संस्कृत-व्याख्या**—

'रामः सीतामकथयत् यत् अहं सरयूम् अतीव आद्रिये' इति वर्णनं दृश्यताम् अस्मिन् श्लोके—

याम्—सरयूम्, मे—मम, मानसम्—चित्तम्, सैकतोत्सङ्गसुखोचिता-

नाम्—पुलिनक्रीडानन्दयोग्यानाम्, उत्तरकोशलानाम्—उत्तरकोशलस्थं राज्ञाम्, सामान्यधात्रीम्, इव—साधारण मातरम् इव, सम्भावयति—मन्यते ।

अत्र उपमालङ्कारो वर्तते ।

टिप्पणी— सैकतोत्सङ्गसुखोचितानाम्—वालुकामय तट रूप गोद में सुख प्राप्त करने योग्य । उद् + सञ्ज् + घञ्—उत्सङ्गः । 'सैकतं सिकतामयम्' इत्यमरः । सिकता + अण्—सैकतम् । सैकतरूपः उत्सङ्गः सैकतोत्सङ्गः (मध्यमपदलोपी समास), तस्मिन् सुखम्, तस्मिन् उचिताः (सहसुपा समास) तेषां सैकतोत्सङ्गसुखोचितानाम् । सामान्यधात्रीम्—सर्वसाधारण माता, धाय । दधाति इति धात्री । धा + तृच् + ङीप्, सामान्या धात्री सामान्य धात्री (कर्मधारय समास), ताम् ।

सेयं मदीया जननीव तेन मान्येन राज्ञाः सरतूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ।। ६३ ।।

अन्वय—मदीया जननी इव मान्येन तेन राज्ञा वियुक्ता सा इयं सरयूः दूरे वसन्तं मां शिशिरानिलैः तरङ्गहस्तैः उपगूहति इव ।

शब्दार्थ—मदीया जननी इव—मेरी माता (कौशल्या) की तरह, मान्येन तेनराज्ञा—पूज्य उस राजा (दशरथ) से, वियुक्ता—बिछुड़ी हुई, सा—वह, इयम्—यह, सरयूः—सरयूनदी, दूरे वसन्तम्—दूर में स्थित, माम्—मुझे, शिशिरानिलैः—शीतल पवन वाले, तरङ्गहस्तै—लहर रूप हाथों से, उपगूहति इव—मानो आलिङ्गन कर रही है ।

भाषानुवाद—मेरी माता (कौशल्या) की तरह पूज्य उस राजा (दशरथ) से बिछड़ी हुई वही यह सरयू नदी दूर में स्थित मुझे शीतल पवन वाले लहर रूप हाथों से मानो आलिङ्गन कर रही है ।

संस्कृत-व्याख्या—

सरयूनद्याः वर्णनं करोति कविः—

मदीया—मम, जननी—माता, इव—यथा, मान्येन—पूज्येन, तेन—

अमुना, राज्ञा—नृपेण, दशरथेन इत्यर्थः। वियुक्ता—रहिता, सा—असौ, इयम्—एषा, सरयूः—सरयूनदी, दूरे—सुदूरे, वसन्तम्—निवसन्तम्, माम्-रामम् शिशिरानिलैः—शीतल-पवनैः, तरङ्गहस्तैः—भङ्गकरैः, उपगूहति—आलिङ्गति, इव—यथा।

श्लोकेऽस्मिन् उपमालङ्कारः रूपकालङ्कार उत्प्रेक्षालङ्कारश्च सन्ति।

टिप्पणी—मदीया—मेरी। मम् इयम् इति अस्मद्+छ+ईय+टाप्, 'प्रत्योत्तरपदयोश्च' सूत्र से मदादेश हुआ।

वियुक्ता—बिछड़ी हुई। वि+युज्+टाप्।

तरङ्गहस्तैः—लहर रूपी हाथों से। तरङ्गरूपाः हस्ताः (मध्यमपद-लोपी समास), तैः।

विरक्तसन्ध्याकपिशं परस्ताद्यतो रजः पार्थिवमुज्जिहीते।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥६४॥

अन्वय—विरक्तसन्ध्याकपिशं पार्थिवं रजः पुरस्तात् यतः उज्जिहीते (ततः) हनूमत्कथितप्रवृत्तिः भरतः ससैन्यः मां प्रत्युद्गतः इति शङ्के।

शब्दार्थ—यतः—जिस कारण से, पुरस्तात्—सामने, विरक्तसन्ध्या-कपिशम्—अत्यन्त लाल सन्ध्या के समान कपिशवर्ण वाली, पार्थिवं रजः—पृथिवी की धूलि, उज्जिहीते—उठ रही है, (ततः—उससे) इति शङ्के—यह शङ्का (अनुमान) करता हूं, हनूमत्कथितप्रवृत्तिः—हनुमान द्वारा (मेरे आगमन का) समाचार जानकर, भरतः—भरत, ससैन्यम्—सेना के साथ मां प्रत्युद्गतः—मेरी अगवानी के लिए आ रहे हैं।

भाषानुवाद—जिस कारण से सामने अत्यन्त लाल सन्ध्या के समान कपिशवर्णवाली पृथिवी की धूलि उठ रही है (उससे) यह अनुमान करता हूं कि हनुमान द्वारा (मेरे आगमन का) समाचार जानकर भरत सेना के साथ मेरी अगवानी के लिए आ रहे हैं।

संस्कृत-व्याख्या—

रामस्य स्वागताय भरतस्यागमनस्य अनुमानं वर्णयति कविः—

विरक्तसन्ध्याकपिशम्—विरक्ता अतिरिक्ता या सन्ध्या सन्ध्याकालः तद्वत् कपिशं ताम्रवर्णम्, पार्थिवम्—पृथिव्याः इदम्, रजः—रेणुः धूलिः वा, पुरस्तात्—अग्रतः, यतः—यस्मात् कारणात्, उज्जिहीते—उद्गच्छति, (ततः—तस्मात्) हनूमत्कथितप्रवृत्तिः—पवनपुत्रनिवेदितप्रवृत्तिः, भरतः कैकेय्याः पुत्रः, ससैन्यः—सेनासहितः, माम्—रामम्, प्रत्युद्गतः—स्वागताय चलितः, इति, शङ्के—तर्कयामि।

अत्रोपमालङ्कारः।

टिप्पणी—हनूमत्कथितप्रवृत्तिः—जिसे हनुमान ने (मेरे आगमन का) समाचार बता दिया। हनुः अस्ति अस्य इति हनूमान्। हनु+मतुप्, 'शरादीनां च' इति सूत्रेण दीर्घः। हनूमता कथिता हनूमत्कथिता (तृतीया तत्पुरुषसमासः), हनूमत्कथिता प्रवृत्तिः यस्य सः (बहुव्रीहिसमासः)। ससैन्यः —सेना के साथ। सैन्येन सह वर्तमानः इति ससैन्यः (तेन सहेति बहुव्रीहि समासः)।

अद्धा श्रियं पालितसङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः।
हत्वा निवृत्ताय मृधे खरादीन्संरक्षितां त्वामिव लक्ष्मणो मे ॥६५॥

अन्वय—अद्धा साधुः सः पालितसंगराय मे अनघां संरक्षितां श्रियं मृधे खरादीन् हत्वा निवृत्ताय लक्ष्मणः त्वाम् इव प्रत्यर्पयिष्यति।

शब्दार्थ—अद्धा—सत्य है, साधुः सः—सज्जन वह (भरत), पालित-संगराय—(पिता की आज्ञा रूपी( प्रतिज्ञा का पालन किये हुए, मे—मुझे, अनघाम्—अदूषित, संरक्षिताम्—सुरक्षित, श्रियम्— (राज्य—)लक्ष्मी को, मृधे—युद्ध में, खरादीन् हत्वा—खर आदि राक्षसों को मारकर, निवृत्ताय —लौटे हुए (मुझे), लक्ष्मणः—लक्ष्मण ने, त्वाम् इव—जैसे तुम्हें (लौटाया था वैसे ही), प्रत्यर्पयिष्यति—लौटायेंगे।

भावानुवाद—सत्य है, सज्जन वे भरत (पिता की आज्ञा रूपी) प्रतिज्ञा का पालन किये हुए मुझे अदूषित और सुरक्षित राज्यलक्ष्मी को, युद्ध में खर आदि राक्षसों को मारकर लौटे हुए (मुझे) लक्ष्मण ने जैसे तुम्हें (लौटाया था वैसे ही) लौटायेंगे।

संस्कृत-व्याख्या—

'रामः सीतां प्रति अकथयत् यत् भरतः मह्यं सुरक्षितां राज्यलक्ष्मीम् अर्पयिष्यति इति सत्यम्' दृश्यतामिदं वर्णनम् अस्मिन् श्लोके—

अद्धा—सत्यम्, साधुः—सज्जनः, सः—असौ, भरतः इत्यर्थः। पालितसंगराय—पालितपितृप्रतिज्ञाय, मे—मह्यम्, अनघाम्—अदोषाम्, संरक्षिताम्—सुरक्षिताम्, श्रियम्—लक्ष्मीम्, राज्यलक्ष्मीम् इत्यर्थः। मृधे—युद्धे, खरादीन्—खरप्रभृतीन्, (राक्षसान्), हत्वा—हननं कृत्वा, निवृत्ताय—प्रत्यावृत्ताय, लक्ष्मणः—सौमित्रिः, त्वाम् इव—भवतीम् इव, प्रत्यर्पयिष्यति—समर्पयिष्यति।

अत्रोपमालङ्कारः।

टिप्पणी—अद्धा—सत्य, अवश्य। यह पद अव्यय है। 'सत्ये त्वद्धाऽञ्जसा द्वयम् इत्यमरः।

अनघाम्—पापरहित। अविद्यमानम् अघं यस्याः सा अनघा (नञ्-बहुव्रीहिसमास) ताम्।

प्रत्यर्पयिष्यति—लौटा देंगे। प्रति + ऋ + णिच्, पुक् का आगम + लृट् (प्रथमपुरुष एकवचन)।

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६॥

अन्वय—चीरवासा पदातिः असौ भरतः पश्चादवस्थापितवाहिनीकः (सन्) गुरुं पुरस्कृत्य वृद्धैः अमात्यैः सह अर्घ्यपाणिः (सन्) माम् अभ्युपैति।

शब्दार्थ—चीरवासा—वल्कल वस्त्रधारण किये हुए, पदातिः—पैदल चलते हुए, असौ—वे (भरत), पश्चात् अवस्थापितवाहिनीकः—सेना को पीछे रखकर, गुरुम्—गुरु (वशिष्ठ) को, पुरस्कृत्य—आगे कर, वृद्धैः अमात्यैः सह—वृद्ध मन्त्रियों के साथ, अर्घ्यपाणिः—हाथ में अर्घ्य लिए, माम् अभ्युपैति—मेरी ओर आ रहे हैं।

भावानुवाद—वल्कलवस्त्र धारण किये हुए और पैदल चलते हुए वे

भरत सेना को पीछे रखकर गुरु (वशिष्ठ) को आगे कर वृद्ध मन्त्रियों के साथ हाथ में अर्घ्य (पूजन-सामग्री) लिए मेरी ओर आ रहे हैं।

संस्कृत-व्याख्या—

पूजोपकरणमादाय वृद्धैः अमात्यैः सह भारतस्य आगमनस्य वर्णनं करोति कविः—

चीरवासा—वल्कलवसनः, पदातिः—पादचारी, असौ—सः भरतः कैकेय्याः पुत्रः, पश्चादवस्थापित वाहिनीकः—पश्चात् पृष्ठभागे अवस्थापिता वाहिनी सेना येन स तथोक्तः सन्, गुरुम्-वशिष्ठम्, पुरस्कृत्य—अग्रे कृत्वा वृद्धैः—स्थविरैः, अमात्यैः—मन्त्रिभिः, सह—साकम्, अर्घ्यपाणिः—अर्घ्यं पाणौ यस्य सः (सन्), माम्—रामम्, अभ्युपैति—समीपे आगच्छति।

टिप्पणी—पदातिः—पैदल चलने वाला। पादाभ्याम् अतति इति पदातिः। पद + अत् + इनि।

पुरस्कृत्य—आगे करके। पुरस् + कृ + ल्यप्। यहाँ 'पुरोऽव्ययम्' सूत्र से प्रातितत्पुरुष समास हुआ।

पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता।
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम्॥ ६७॥

अन्वय—यः पित्रा विसृष्टाम् अङ्कगतां श्रियं युवा अपि मदपेक्षया अभोक्ता (सन्) इयन्ति वर्षाणि तया सह उग्रम् आसिधारं व्रतम् अभ्यस्यति इव।

शब्दार्थ—यः—जो (भरत), पित्रा—पिता के द्वारा, विसृष्टा—छोड़ी गयी यानी दी गयी, अङ्कगताम्—गोद में आयी हुई, श्रियम्—लक्ष्मी को, मदपेक्षया—मेरी अपेक्षा के कारण अर्थात् मेरे प्रति भक्ति होने के कारण, युवा अपि—युवक होकर भी, अभोक्ता—न भोग करते हुए, इयन्ति वर्षाणि—इतने वर्षों तक, तया सह—उस (राज्यलक्ष्मी) के साथ, उग्रम् आसिधारं व्रतम् अभ्यस्यति इव—मानों कठिन आसिधार व्रत का अभ्यास करते रहे हैं।

भाषानुवाद—जो (भरत) पिता के द्वारा छोड़ी गयी यानी दी गयी और गोद में आयी हुई लक्ष्मी को मेरी अपेक्षा के कारण अर्थात् मेरे प्रति

भक्ति होने के कारण युवक होकर भी न भोग करते हुए इतने वर्षों तक यानी चौदह वर्षों तक उस राज्यलक्ष्मी के साथ मानों कठिन 'आसिधारव्रत' का अभ्यास करते रहे हैं।

**संस्कृत-व्याख्या—**

भरतस्य प्रशंसां वर्णयति कविः—

यः—भरतः, पित्रा—तातेन जनकेन वा, विसृष्टाम्—दत्ताम्, अङ्कगताम्—क्रोडप्राप्ताम्, श्रियम्—राज्यलक्ष्मीम्, युवा अपि तरुणः अपि, मदपेक्षया—मयि भक्त्या, अभोक्ता—न भोक्ता, इयन्ति वर्षाणि—एतावतः संवत्सरान् तया—अमुया, राज्यलक्ष्म्या इत्यर्थः। सह—सार्धम्, उग्रम्—तीक्ष्णम्, आसिधारम्—खड्गधाराचङ्क्रमणम्, व्रतम्—नियमम्, अभ्यस्यति—वर्तयति, इव—यथा।

श्लोकोऽस्मिन् समासोक्तिरलङ्कारः उत्प्रेक्षालङ्कारः च स्तः।

टिप्पणी—इयन्ति वर्षाणि—इतने वर्षों तक। यहाँ 'कालाध्वनोरत्यन्तसंयोगे' सूत्र से द्वितीया विभक्ति हुई।

आसिधारव्रतम्—आसिधारव्रत। जैसे तलवार की धार पर चलना बहुत कठिन है उसी प्रकार युवक का युवति के साथ काम-भावना से रहित होकर शयन करना कठिन है। पर, यदि कोई संयम की भावना को लेकर इस तरह आचरण करता है तो उस आचरण को 'आसिधारव्रत' कहते हैं।

एतावदुक्तवति दाशरथौ तदीया-
मिच्छां विमानमधिदेवतया विदित्वा।
ज्योतिष्पथादवततार सविस्मया-
भिरुद्वीक्षितं प्रकृतिभिर्भरतोनुगाभिः ॥ ६८ ॥

अन्वय—दाशरथौ एतावदुक्तवति (सति) तदीयाम् इच्छाम् अधिदेवतया विदित्वा विमानं सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः उद्वीक्षितं (सत्) ज्योतिष्पथात् अवततार।

शब्दार्थ—दाशरथौ एतावदुक्तवति (सति)—राम के इतना कह चुकने

पर, तदीयाम् इच्छाम्---उनकी इच्छा को, अधिदेवतया---अधिदेवता के द्वारा, विदित्वा---जानकर, विमानम्---पुष्पकविमान, सविस्मयाभिः---विस्मय के साथ, भरतानुगाभिः प्रकृतिभिः---भरत के पीछे-पीछे चलने वाली प्रजा द्वारा, उद्वीक्षितम्---देखा जाता हुआ, ज्योतिष्पथात्---आकाश से नीचे, अवततार---उतर पड़ा।

भाषानुवाद---राम के इतना कह चुकने पर उनकी इच्छा को अधिदेवता के द्वारा जानकर पुष्पक विमान विस्मय के साथ भरत के पीछे-पीछे चलने वाली प्रजा द्वारा देखा जाता हुआ आकाश से नीचे उतर पड़ा।

संस्कृत-व्याख्या---

महाकविकालिदासः श्लोकेऽस्मिन् आकाशात् विमानावतरणस्य वर्णनं करोति---

दाशरथी---रामचन्द्रे, एतावदुक्तवति---एतावत् इयत् वचनम् उक्तवति कथितवति, तदीयाम्---रामचन्द्रसम्बन्धिनीम्, इच्छाम्---काङ्क्षाम्, अधिदेवतया---अधिदेवेन, विदित्वा अवगम्य ज्ञात्वा वा, विमानम्---यानम्, सविस्मयाभिः---विस्मययुक्ताभिः, भरतानुगाभिः---भरतम् अनुगच्छन्तीभिः-प्रकृतिभिः---प्रजाभिः, उद्वीक्षितम्---समुद्वीक्षितम् (सत्), ज्योतिष्पथात्---गगनात्, अवततार---वसुधातलम् आगतम्।

टिप्पणी---दशरथौ दशरथ के पुत्र, राम के। दशरथस्य अपत्यं पुमान् दाशरथिः, दशरथ + इन्, तस्मिन्। ज्योतिष्पथात्---नक्षत्र पथ से यानी आकाश से। यहाँ 'अपादाने पञ्चमी' सूत्र से पञ्चमी विभक्ति हुई।

महाकविकालिदास ने महाकाव्य के लक्षण के अनुसार सर्ग के अन्तिम भाग में ६८ वें से लेकर ७८ वें श्लोक तक वसन्ततिलका छन्द का प्रयोग किया है। इसका लक्षण है---'उक्ता वसन्ततिलका तभजा जगौ गः।' अर्थात् जिसके प्रत्येक चरण में तगण, भगण, दो जगण, दो गुरु हों, उसे 'वसन्ततिलका' छन्द कहते हैं। इसके पाद के अन्त में यति होती है।

तस्मात्पुरःसरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवात्तरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन रामः ॥६९॥

**अन्वय**—सेवाविचक्षणहरीश्वरदत्तहस्तः रामः पुरः सरविभीषणदर्शितेन अदूरमहीतलेन भङ्गिरचितस्फटिकेन मार्गेण तस्मात् यानात् अवातरत् ।

**शब्दार्थ**—सेवाविचक्षणहरीश्वरदत्तहस्तः—सेवा-कर्म में निपुण सुग्रीव के द्वारा हाथ का सहारा दिये गये, रामः—राम, पुरःसरविभीषणदर्शितेन—आगे चलने वाले विभीषण द्वारा दिखाये गये, अदूरमहीतलेन—समीपवर्ती भूतल से लगे हुए, भङ्गिरचितस्फटिकेन—सुन्दरता के साथ जटित स्फटिक मणियों वाले, मार्गेण—मार्ग से, तस्मात् यानात्—उस (पुष्पक विमान से, अवातरत्—उतर गये ।

**भाषानुवाद**—सेवा-कर्म में निपुण सुग्रीव के द्वारा हाथ का सहारा दिये गये राम आगे चलने वाले भीषण द्वारा दिखाये गये समीपवर्ती भूतल से लगे हुए सुन्दरता के साथ जटित स्फटिकमणियों वाले मार्ग से, उस (पुष्पक) विमान से उतर गये ।

**संस्कृत-व्याख्या**—

पुष्पकविमानात् रामस्यावतरणस्य वर्णनं करोति कविः—

सेवाविचक्षणहरीश्वरदत्तहस्तः—परिचर्याप्रवीणसुग्रीवप्रदत्तकरः, रामः—दाशरथिः, पुरः सरविभीषणदर्शितेन—पुरः सरेण अग्रे व्रजता विभीषणेन रावणानुजेन दर्शितेन-प्रदर्शितेन, अदूरमहीतलेन—न दूरमहीतलेन, भङ्गिरचितस्फटिकेन—भङ्गिभिः विच्छित्तिभिः रचितस्फटिकेन बद्धस्फटिकेन, मार्गेण—पथा, तस्मात्—अमुष्मात्, यानात्—विमानात्, अवातरत्—अवतीर्णवान् ।

श्लोकेऽस्मिन् स्वभावोक्तिरलङ्कारो विद्यते ।

**टिप्पणी**—सेवाविचक्षणहरीश्वरदत्तहस्तः—सेवा करने में दक्ष वानरराज (सुग्रीव) के हाथ का सहारा लिये हुए । हरीणां वानराणाम् ईश्वरः

हरीश्वरः (कर्मधारय समास), सेवाविचक्षणहरीश्वरेण दत्तः हस्तः यस्मै सः (बहुव्रीहि समास)।

अवातरत्—लतर गये। अव + तॄ + लङ् (प्रथम पुरुष एकवचन)।

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य
स भ्रातरं भरतमर्घ्यपरिग्रहान्ते।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ
तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥ ७० ॥

अन्वय—प्रयतः सः इक्ष्वाकुवंशगुरवे प्रणम्य अर्घ्यपरिग्रहान्ते पर्यश्रुः (सन्) भ्रातरं भरतम् अस्वजत्। तद्भक्त्यपोढपितृराज्यमहाभिषेके मूर्धनि उपजघ्रौ च।

शब्दार्थ—प्रयतः—पवित्र, सः—उन (राम) ने, इक्ष्वाकुवंशगुरवे—इक्ष्वाकुवंश के गुरु (वशिष्ठ) को, प्रणम्य—प्रणाम कर, अर्घ्यपरिग्रहान्ते—अर्घ्य ग्रहण करने के अन्त में, पर्यश्रुः—अश्रु बहाते हुए, भ्रातरं भरतम्—भाई भरत को, अस्वजत्—आलिङ्गन किया। तद्भक्त्यपोढपितृराज्यमहाभिषेके—उनकी, (राम के प्रति) भक्ति के कारण पिता के द्वारा दिये गये राज्य के महान् अभिषेक का यानी राजतिलक का परित्याग करने वाले (भरत के), मूर्धनि—सिर में, उपजघ्रौ—सूँघा।

भाषानुवाद—पवित्र उन राम ने इक्ष्वाकुवंश के गुरु (वशिष्ठ) को प्रणाम कर अर्घ्यग्रहण करने के बाद अश्रु बहाते हुए भाई भरत को आलिङ्गन किया और उनकी (राम के प्रति) भक्ति के कारण पिता के द्वारा दिये गये राज्य के महान् अभिषेक यानी राजतिलक का परित्याग करने वाले (भरत के) सिर को सूँघा।

संस्कृत-व्याख्या—

रामस्य वशिष्ठभरताभ्यां सम्मिलनस्य वर्णनं करोति कविकालिदासः—

प्रयतः—पवित्रः, सः—असौ, रामः इत्यर्थः। इक्ष्वाकुवंशगुरवे—वशिष्ठाय, प्रणम्य—नत्वा, अर्घ्यपरिग्रहान्ते—पूजाद्रव्यस्वीकारोपरान्ते, पर्यश्रुः—परिगतानन्दबाष्पः (सन्), भ्रातरम्—अनुजम्, भरतम्—कैकेयीसुतम्,

अस्वजत्—आलिङ्गन्, तद्भक्त्यपोढपितृराज्यमहाभिषेके—तस्मिन् रामचन्द्रे भक्त्या अपोढः परिहृतः पितृराज्यमहाभिषेको येन तादृशे, मूर्धनि—शिरसि, उपजघ्रौ—घ्रातवान्, च ।

टिप्पणी—प्रयतः—पवित्र । 'पवित्रः प्रयतः पूतः' इत्यमरः । इक्ष्वाकुवंशगुरवे—इक्ष्वाकुवंश के गुरु (वशिष्ठ) को । इक्ष्वाकोः वंशः, तस्य गुरुः (षष्ठी तत्पुरुष समास), तस्मै । यहाँ 'गुरुम् अनुकूलयितुम' ऐसी विवक्षा करके 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' सूत्र से चतुर्थी विभक्ति हुई । पर, 'प्रणम्य' का कर्म होने से यहां यानी 'गुरु' शब्द में द्वितीया विभक्ति होनी चाहिए ।

पर्यश्रुः—अश्रु वहाते हुए । परिगतानि अश्रुणि यस्यः स (बहुव्रीहि समास) ।

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च<br>
प्लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान् ।<br>
अन्वग्रहीत्प्रणमतः शुभदृष्टिपातै-<br>
र्वार्तानुयोगमधुराक्षरया च वाचा ॥७१॥

अन्वय—श्मश्रुप्रवृद्धिजनिताननविक्रियान् च प्ररोहजटिलान् प्लक्षान् इव प्रणमतः मन्त्रिवृद्धान् शुभदृष्टिपातैः वार्तानुयोगमधुराक्षरया वाचा च अन्वग्रहीत् ।

शब्दार्थ—श्मश्रुप्रवृद्धिजनिताननविक्रियान्—दाढ़ी-मूँछों के बढ़ जाने से उत्पन्न विकृत मुख वाले, च—और, प्ररोहजटिलान् प्लक्षान् इव—बढ़ी हुई जटाओं से युक्त, वट-वृक्षों के समान, प्रणमतः—प्रणाम करते हुए, मन्त्रिवृद्धान्—वृद्धमन्त्रियों को, शुभदृष्टिपातैः—स्नेहयुक्त दृष्टि से देखकर, च—और, वार्तानुयोगमधुराक्षरया वाचा—मधुर अक्षरों वाली वाणी से कुशल-समाचार पूछकर, अन्वग्रहीत किया ।

भाषानुवाद—दाढ़ी-मूँछों के बढ़ जाने से उत्पन्न विकृत मुखवाले और बढ़ी हुई जटाओं से युक्त वट-वृक्षों के समान, प्रणाम करते हुए वृद्ध मन्त्रियों

को स्नेह युक्त दृष्टि से देखकर एवं मधुर अक्षरों वाली वाणी से कुशल-समाचार पूछकर अनुगृहीत किया।

संस्कृत-व्याख्या—

'रामः मन्त्रिवृद्धान् मधुराक्षरया वाचा अनुगृहीतवान्' इत्यस्य वर्णनं कृतं कविना श्लोकेऽस्मिन्—

श्मश्रुप्रवृद्धिजनिताननविक्रियान्—श्मश्रूणां मुखरोम्णां प्रवृद्धिः अतिवर्धनं तया जनिता उत्पन्ना आननविक्रिया वदनविकारो येषां तादृशान्, प्ररोह-जटिलान्—प्ररोहैः शाखावलम्बिभिः अधोमुखैः, प्रङ्कुरैः जटिलाम् जटावतः, प्लक्षान्—वटवृक्षान्, इव—यथा, प्रणमतः—प्रकर्षेण नमतः, मन्त्रिवृद्धान्—वृद्धमात्यान्, शुभदृष्टिपातैः—मङ्गलकारकप्रेक्षणैः, वार्तानुयोगमधुराक्षरया—वार्तानां कुशलप्रश्नानाम् अनुयोगेन प्रश्नेन मधुराणि अक्षराणि वर्णाः यस्यां तथाभूतया, वाचा च—वाण्या च, अन्वग्रहीत् अनुगृहीतवान्।

श्लोकेऽस्मिन् उपमालङ्कारो वर्तते।

टिप्पणी—श्मश्रुप्रवृद्धिजनिताननविक्रियान्—दाढ़ी-मूछों के बढ़ जाने से जिनका मुख विकृत हो गया था। प्र+वृध्+क्तिन्—प्रवृद्धिः। श्मश्रूणां प्रवृद्धिः श्मश्रुप्रवृद्धिः। आननस्य विक्रिया आनन विक्रिया। श्मश्रुप्रवृद्धया जनिता आनन विक्रिया येषां ते (बहुव्रीहिसमास), तान्।

प्लक्षान् इव—वट-वृक्षों की तरह। 'प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः' इत्यमरः।

मन्त्रिवृद्धान्—वृद्धमन्त्रियों को। मन्त्रिषु वृद्धाः मन्त्रिवृद्धाः (सुप्सुपा समास), तान्।

दुर्जातवन्धुरयमृक्षहरीश्वरा मे
पौलस्त्य एव समरेषु पुरःप्रहर्ता।
इत्यादृतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥७२॥

अन्वय—अयं मे दुर्जातवन्धुः ऋक्षहरीश्वरः, एष समरेषु पुरःप्रहर्ता पौलस्त्य इति आदृतेन रघुनन्दनेन कथितौ उभौ भरतः लक्ष्मणं व्युत्क्रम्य ववन्दे।

**शब्दार्थ**—अयम्—यह, मे—मेरे, दुर्जातबन्धु—विपत्तिकाल के बन्धु, ऋक्षहरीश्वरः—रीछ-वानरों के अधिपति (सुग्रीव), एषः—यह, समरेषु—युद्धों में, पुरःप्रहर्ता—आगे बढ़कर प्रहार करने वाले, पौलस्त्यः—पुलस्त्य—सन्तान (विभीषण), इति—इस प्रकार, आदृतेन रघुनन्दनेन—आदरपूर्वक राम द्वारा, कथितौ—कहे गये, उभौ—(उन) दोनों (सुग्रीव और विभीषण) को भरतः—भरत ने, लक्ष्मणं व्युत्क्रम्य—लक्ष्मण को छोड़कर, ववन्दे—प्रणाम किया।

**भाषानुवाद**—ये मेरे विपत्तिकाल के बन्धु और रीछ-वानरों के अधिपति (सुग्रीव) हैं। ये युद्ध में आगे बढ़कर प्रहार करने वाले पुलस्त्य-सन्तान (विभीषण) हैं—इस प्रकार आदरपूर्वक राम द्वारा कहे जाने पर उन दोनों (सुग्रीव और विभीषण) को भरत ने लक्ष्मण को छोड़कर प्रणाम किया।

**संस्कृत-व्याख्या**—

रामः सुग्रीवस्य विभीषणस्य च परिचयं ददानः भरतम् अकथयत्—

अयम्—एषः, मे—मम, दुर्जातबन्धुः—आपद्बन्धुः, ऋक्षहरीश्वरः—सुग्रीवः इत्यर्थः। एषः—अयम्, समरेषु—युद्धेषु, पुरःप्रहर्ता—अग्रे अक्रमणकारी, पौलस्त्यः—विभीषणः इत्यर्थः। इति—अनेन प्रकारेण, आदृतेन—आदरवता, रघुनन्देन—रामेण, कथितौ—भाषितौ, उभौ—सुग्रीवविभीषणौ, भरतः—कैकेयीपुत्रः, लक्ष्मणम्—सौमित्रिम्, सुमित्रा पुत्रम् इत्यर्थः। व्युत्क्रम्य—उल्लंघ्य, ववन्दे—प्रणामं कृतवान्।

**टिप्पणी**—दुर्जातबन्धुः—दुःख के बन्धु यानी दुःख में साथ देने वाले। दुष्टं जातं दुर्जातम् (प्रादिसमास), दुर्जाते बन्धुः दुर्जातबन्धुः (सुप्सुपासमास)।

पौलस्त्यः—पुलस्त्य मुनि के कुल में उत्पन्न। पुलस्त्यस्य गोत्रापत्यं पुमान् इति पौलस्त्यः, पुलस्त्य + अण्।

सौमित्रिणा तदनु संससृजे स चैन-<br>
मुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग।<br>
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन<br>
क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥७३॥

**अन्वय**—तदनु सः सौमित्रिणा संससृजे, नम्रशिरसम् एनम् उत्थाप्य रूढेन्द्रजित्प्रहरणव्रणकर्कशेन अस्य उरः स्थलेन भुजमध्यं क्लिशयन् इव भृशम् आलिलिङ्ग च ।

**शब्दार्थ**—तदनु—उसके बाद, सः—वह भरत) सौमित्रिणा—लक्ष्मण से, संससृजे—मिले, नम्रशिरसम्—झुके हुए सिर वाले, एनम्—इन (लक्ष्मण) को, उत्थाप्य—उठाकर, रूढेन्द्रजित्प्रहरणव्रणकर्कशेन—मेघनाद के प्रहारों से किये गये घावों से कठोर, अस्य—इनके (लक्ष्मण के), उरः स्थलेन—वक्ष-स्थल से, भुजमध्यं क्लिशयन् इव—मानो (अपनी छाती) को दबाते हुए, भृशम् आलिलिङ्ग—प्रगाढ़ आलिङ्गन किया ।

**भाषानुवाद**—उसके बाद भरत लक्ष्मण से मिले और (प्रणाम हेतु) झुके हुए सिर वाले इन लक्ष्मण को उठाकर मेघनाद के प्रहरों से किये गये घावों से कठोर इनके वक्षःस्थल से मानों (अपनी) छाती को दवाते हुए प्रगाढ़ आलिङ्गन किया ।

**संस्कृत-व्याख्या**—

कविकालिदासः भरतलक्ष्मणयोः सम्मिलनस्य वर्णनं करोति—

तदनु—तत्पश्चात्, सः—असौ, भरतः इत्यर्थः । सौमित्रिणा—लक्ष्मणेन, संससृजे—सङ्गतः, नम्रशिरसम्—नतमस्तकम्, एनम्—इमम्, लक्ष्मणम् इत्यर्थः । उत्थाप्य—उद्यम्य, रूढेन्द्रजित्प्रहरणव्रणकर्कशेन—उत्पन्नमेघना-दास्त्रक्षतकठोरेण, अस्य—एतस्य, लक्ष्मणस्य इत्यर्थः । उरःस्थलेन—वक्षः स्थलेन भुजमध्यम्—बाहुमध्यम्, वक्षःस्थलम् इति भावः । क्लिशयन् इव—पीडयन् इव, भृशम्—प्रगाढम्, आलिलिङ्ग, च—परिषस्वजे च ।

**टिप्पणी**—सौमित्रिणा—लक्ष्मण से । सुमित्रायाः अपत्यं पुमान् सौमित्रिः, सुमित्रा + इञ्, तेन ।

नम्रशिरसम्—नतमस्तक वाले को । नम्रं शिरो यस्य स नम्रशिराः (बहुव्रीहिसमास), तम् ।

रामज्ञयाहरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान् ।
तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखन्युपलेभिरे ते ।।७४।।

अन्वय—तदानीं रामाज्ञया हरिचमूपतयः मनुष्यवपुः कृत्वा गजेन्द्रान् । आरुरुहुः । बहुधा मदवारिधाराः क्षरत्सु तेषु ते शैलाधिरोहणसुखानि उपलेभिरे ।

शब्दार्थ—तदानीम्—उस समय, रामाज्ञया—राम की आज्ञा से, हरिचमूपतयः—वानरों के सेनापति, मनुष्यवपुः कृत्वा—मनुष्य-देह धारण कर, गजेन्द्रान् आरुरुहुः—गजराजों पर सवार हो गये, बहुधा—अनेक प्रकार से, मदवारिधाराः—मदजल की धाराओं को, क्षरत्सु—बहाते हुए, तेषु—उन (हाथियों) पर, ते—उन (सेनापतियों) ने शैलाधिरोहणसुखानि—पर्वतारोहण के सुख को, उपलेभिरे—प्राप्त किया ।

भाषानुवाद—उस समय राम की आज्ञा से वानरों के सेनापति मनुष्य-देह धारणकर गजराजों पर सवार हो गये । अनेक प्रकार से मदजल की धाराओं को बहाते हुए उन (हाथियों) पर उन्होंने पर्वतारोहण के सुख को प्राप्त किया ।

संस्कृत-व्याख्या—

'रामस्याज्ञया वानरसेनापतयः मनुष्य शरीरं धृत्वा गजेन्द्रान् आरूढवन्तः' इत्यस्य वर्णनं कविनाकृतं श्लोकेऽस्मिन्—

तदानीम्—तस्मिन् काले, रामाज्ञया—रामादेशेन, हरिचमूपतयः—वानरसेनापतयः, मनुष्यवपुः—मनुजशरीरम्, कृत्वा—विधाय, गजेन्द्रान्—गजराजान्, आरुरुहुः—आरूढवन्तः बहुधा—अनेकशः, मदवारिधाराः—मद जलप्रवाहान्, क्षरत्सु—वर्षत्सु, तेषु—अमीषु, गजेन्द्रेषु इत्यर्थः । ते—अमी, हरिचमूपतय इति यावत्, शैलाधिरोहणसुखानि—पर्वतारोहणानन्दान्, उपलेभिरे—अनुबभूवुः ।

अत्र निदर्शनालङ्कारः ।

टिप्पणी—तदानीम्—उस समय । यह अव्यय है । तस्मिन् काले इति विग्रहे तद् + दानीम् ।

बहुधा—अनेक प्रकार से । बहु + धाच् ।

मदवारिधाराः—मदजल की धाराओं को । मदस्यवारि, तस्य धाराः (षष्ठी तत्पुरुष), ताः ।

सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान्दशरथप्रभवानुशिष्टः ।
मायाविकल्परचितैरपि ये तदीयै-
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५ ॥

अन्वय—सानुप्लवः क्षणदाचराणां प्रभुरपि दशरथप्रभवानुशिष्टः (सन्) रथान् भेजे । ये मायाविकल्परचितैः अपि तदीयैः स्यन्दनैः तुलितकृत्रिमभक्तिशोभाः न ।

शब्दार्थ—सानुप्लवः—अनुचरों सहित क्षणदाचराणाम् प्रभुः अपि राक्षसों के प्रभु भी यानी विभीषण भी, दशरथप्रभवानुशिष्टः—दशरथ के पुत्र (राम) की आज्ञा पाकर, रथान् भेजे—रथों पर सवार हुए । ये—जो (रथ), मायाविकल्परचितैः—माया की कल्पना से बनाये गये भी, तदीयैः स्यन्दनैः—उन (राक्षसों) के रथों से, तुलितकृत्रिमभक्तिशोभाः न—कृत्रिम रचना की शोभा के कारण तुलना में (कम) नहीं थे ।

भाषानुवाद—अनुचरों सहित राक्षसों के प्रभु भी यानी विभीषण भी दशरथ के पुत्र (राम) की आज्ञा पाकर (उन) रथों पर सवार हुए जो (रथ) माया की कल्पना से बनाये गये भी उन (राक्षसों) के रथों से कृत्रिम रचना की शोभा के कारण तुलना में (कम) नहीं थे ।

संस्कृत-व्याख्या—

'रामस्याज्ञया सपरिजनः विभीषणोऽपि रथान् आरुरोह' इत्यस्य वर्णनं कविनाकृतं श्लोकेऽस्मिन्—

सानुप्लवः—सानुगः, क्षणदाचराणाम्—रात्रिञ्चराणाम्, प्रभुः अपि—स्वामी अपि, दशरथप्रभवानुशिष्टः—रामेणादिष्टः (सन्), रथान्—स्यन्दनान्, भेजे—आरुरोह, ये—रथाः इत्यर्थः। मायाविकल्परचितैः अपि—सङ्कल्पविशेषनिर्मितैः अपि, तदीयैः—विभीषणीयैः, स्यन्दनैः—रथैः, तुलितकृत्रिमभक्तिशोभाः—तुलिता समीकृता कृत्रिमा क्रियया निर्वृता भक्तीनां रचनाविशेषाणां शोभा कान्तिः येषां ते तथोक्ताः, न—नहि।

अत्र व्यतिरेकालङ्कारः।

टिप्पणी—सानुप्लवः—अनुचरों सहित। अनुप्लवन्ते इति अनुप्लवाः अनु+प्लु+अच्, तैः सह विद्यमानः इति सानुप्लवः (तेन सहेति बहुव्रीहि समासः)।

क्षणदाचराणाम्—राक्षसों का। क्षणदासु (रात्रिषु) चरन्ति इति क्षणदाचराः क्षणदा+चर्+ट, तेषाम्। भेजे—सेवन किया यानी बैठ गये। भज्+लिट् (प्रथम पुरुष एकवचन)। तदीयैः—उनके। तेषाम् इमे इति तदीयाः तद्+छ+ईय, तैः।

भूयस्ततो रघुपतिर्विलसत्पताक
मध्यास्त कामगति सावरजो विमानम्।
दोषातनं बुधबृहस्पतियोगदृश्य
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम्॥७६॥

अन्वय—ततः रघुपतिः सावरजः विलसत्पताकं कामगति विमानं भूयः बुधबृहस्पतियोगदृश्यः तारापतिः दोषातनं तरलविद्युत् अभ्रबृन्दम् इव अध्यास्त।

शब्दार्थ—ततः—उसके वाद, रघुपतिः—राम, सावरजः—दोनों भाइयों (भरत और लक्ष्मण) समेत, विलसत्पताकम्—शोभित पताका वाले, कामगति विमानम्—इच्छानुसार चलने वाले विमान पर, भूयः—पुनः, इव—जैसे, बुधबृहस्पतियोगदृश्यः—बुध और बृहस्पति के संयोग से दर्शनीय, तारापतिः—चन्द्रमा, दोषातनम्—रात्रि में, तरल विद्युत्—चंचल बिजली से युक्त, अभ्रवृन्दम् अध्यास्त—मेघसमूह पर बैठता है।

